विशिष्यते। यत्र=स्थाने। देवयवः=देवं द्योतनस्वभावं विष्णुमात्मनः इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः। नराः=मनुष्याः। मदन्ति=तृप्तिमनुभवन्ति। तदस्यामित्यन्वयः। पुनरपि तदेव विशिष्यते। उरुक्रमस्य=अत्यधिकं सर्वं जगदाक्रमणस्य। तदात्मना, अत एव विष्णोः=व्यापकस्य परमेश्वरस्य। परमे=उत्कृष्टे निरतिशये केवलसुखात्मके। पदे=स्थाने। मध्वः=मधुरस्य। उत्सः=निष्यन्दो वर्तते। तदस्याम्। यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति सङ्कल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्यत आह—इत्था=इत्थमुक्तप्रकारेण। सः=विष्णुः। हि=निश्चयेन, सर्वेषां बन्धुः=सुकृतिनां बन्धुभूतो हितकरो वा। तदस्य पदं प्राप्तवतां न पुनरावृत्तेः ॥ ६ ॥

उस विष्णु के अति प्रियलोक ( ब्रह्मलोक ) को ( हम ) प्राप्त करें। जिस स्थान पर यज्ञ दानादि शुभ कर्मों से द्योतन स्वभाव वाले, विष्णु के पास पहुँचने की इच्छा रखने वाले लोग अमृत पीकर संतृप्त रहते हैं। विशाल पदप्रक्षेप वाले विष्णु के उत्कृष्ट एवं सुखमय, परम पद ब्रह्मलोक में मधुर रस का स्रोत ( कुण्ड ) है। वह सुकृतिजनों ( पुण्यात्माओं ) के लिए ऐसा उदार, हितकारी बन्धु है।

विशेष—इस मन्त्र में ब्रह्मलोक की कामना की गई है, क्योंकि वहाँ पहुँचने पर भूख प्यास जरा-मरण पुनरागमनादि का भय नहीं रहता। सङ्कल्प मात्र से ही दिव्यामृत तथा विविध प्रकार के भोज्य पदार्थ सुलभ रहते हैं। संसार में इस प्रकार के सुख-साधनों के जुटाने में मनुष्य को अनेकों सङ्कट के सामना करना पड़ता है। फिर भी उन्हें तृप्ति भर भोग्य पदार्थ नहीं मिलते ॥ ६ ॥

औतथ्यो दीर्घतमा ऋषिः। विष्णुर्देवता। त्रिष्टुप् छन्दः।

**ॐ त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा।**

**प्रविष्णुरस्तु तवसस्तवीयान् त्वेषंह्यस्य स्थविरस्य नाम ॥७॥**

एषः=देवः दानादिगुणयुक्तविष्णुः। शतवर्चसम्=शतसंख्यान्यर्चींषि यस्यास्तादृशीम्। एताम्=पृथिवीम्। उपलक्षणमेतत्। पृथिव्यादीन् त्रिलोकान् महित्वा=महत्त्वेन। त्रिः विचक्रमे=त्रिभिः पदैः विक्रान्तवान्। तवसः=तपस्विनो वृद्धादपि। तवीयान्=( वृद्धतरः ) तवस्वितरः विष्णुः। प्र+अस्तु=अस्माकं प्रभवतु स्वामी भवतु। अस्य स्थविरस्य=वृद्धस्य विष्णोः। नाम=नामकं रूपं विष्णुरित्येतन्नामव वा त्वेषम् हि=यस्माद् दीप्तं तस्मात्कारणात् स विष्णुः प्रभवत्वित्यर्थः ॥ ७ ॥

दानादिगुणयुक्त असंख्य तेजों से युक्त विष्णु ने अपने महत्व से पृथिव्यादि लोकत्रय को तीनों पदों से नाप लिया था। वह विष्णु जो कि वृद्धों से भी वृद्धतर

है। वह हमारे स्वामी बनें। उन विष्णु के स्थविर ( वृद्ध ) रूप अथवा—विष्णु यह नाम जिस कारण से विशेष तेजस्वी हैं। वह विष्णु हमारे प्रभु ( स्वामी ) बनें ॥ ७ ॥

वसिष्ठ ऋषिः। विष्णुर्देवता। त्रिष्टुप् छन्दः।

ॐ विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन्।
ध्रुवासोऽअस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥८॥

एषः=देवः विष्णुः एताम् पृथिवीम्=पृथिव्यादीन् इमान् त्रीन् लोकान्। क्षेत्राय=निवासार्थम्। मनुषे=स्तुवते देवगणाय दशस्यन्=असुरेभ्योऽपहृत्य प्रदास्यन्। विचक्रमे=विक्रान्तवान्। अस्य च विष्णोः। कीरयः=स्तोतारः जनासः=जनाः। ध्रुवासः=निश्चला भवन्ति। ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः। सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः। उरुक्षितिम्=विस्तीर्णं निवासं। चकार=स्तोतृभ्यः करोतीत्यर्थः ॥ ८ ॥

विष्णु ने देवताओं को देने के लिए तथा उनके निवास करने के लिए पृथिवी आदि तीनों लोकों को असुरों से छीनकर अपने पाद त्रय का विक्षेपण किया था। उन विष्णु की स्तुति करने वाले जन-निश्चल ( स्थिर ) स्वर्गादि फल की प्राप्ति करते हैं। जिनका अवतार, कीर्तन स्मरणादि के द्वारा सुख देने वाला है। वह विष्णु भगवान् स्तोताओं को विस्तीर्ण निवासस्थान देते हैं ॥ ८ ॥

परोमात्रयेत्यस्य वसिष्ठ ऋषिः। विष्णुर्देवता। त्रिष्टुप् छन्दः।

ॐ परोमात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।
उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वं परमस्य वित्से ॥ ९ ॥

परः शब्द सकारान्तः परस्तादित्यर्थे। मात्रया परः परस्ताद् वर्तमानया परिमितया इत्यर्थः। तन्वा=शरीरेण। वृधान=वर्धमान हे विष्णो! ते=तव। महित्वम्=महत्त्वम्। न अनु अश्नुवन्ति=नानुव्याप्नुवन्ति। त्रैविक्रमशये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः। ते तव, उभे रजसी=उभौ लोकौ। पृथिव्या आरभ्य पृथिवीमन्तरिक्षञ्च। विद्मः=जानीमः। वयं चक्षुषोपलभामहे नान्यत्। हे देव! द्योतमान विष्णो! त्वमेव परमस्य=स्वर्गादिरुत्कृष्टलोकस्य। परमं लोकं। वित्से=जानासि। अतस्तव महत्त्वं न केनापि व्याप्तुं ज्ञातुं शक्यमिति भावः ॥ ९ ॥

अपने श्रेष्ठ शरीर से बढ़ने वाले हे विष्णो ! तुम्हारी महिमा को कोई भी नहीं जान सकता। तुम्हारे दोनों लोक पृथिवी और अन्तरिक्ष को हम जानते हैं। परन्तु हे देव ! तुम तो परमलोक को भी जानते हो। अतः तुम्हारी महिमा को कोई भी नहीं जान सकता ॥ ९ ॥

अतो देवा इत्यस्य कण्वो मेधातिथिः ऋषिः। विष्णुर्देवता। गायत्री छन्दः।

ॐ अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विच॒क्रमे । पृथि॒व्याः स॒प्त धाम॑भिः ॥ ( ऋ० १-२२-१६ )

विष्णुः = परमेश्वरः। सप्तधामभिः=सप्तभिर्गायत्र्यादिभिः छन्दोभिः साधनभूतैः। यतः = यस्मात्। पृथिव्याः = भूप्रदेशात्। विचक्रमे = विविधं पादक्रमणं कृतवान्। अतः = अस्मात्। पृथिवीप्रदेशात्। नः = अस्मान्। देवाः अवन्तु = रक्षन्तु। विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया आमनन्ति। विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्यापादानाम्। पृथिवीप्रदेशाद् रक्षणं नाम भूर्लोके वर्तमानानां पापनिवारणम् ॥ १० ॥

विष्णु ने सात धामों ( पृथिवी अप् तेज वायु आकाश तन्मात्रा और महत्व ये सात धाम हैं ) से पृथिवी पर विक्रम किया। उसका पराक्रम चल ही रहा है। अतः नक्षत्रादि तेज लोक तथा अग्न्यादि देवता उस प्रभु की महिमा से सब अपना-अपना कार्य करने में समर्थ हुए हैं। उस व्यापक देव राम का सामर्थ्य को लेकर सब देव हमारी रक्षा करें ॥ १० ॥

इदमित्यस्य मेधातिथिः ऋषिः। विष्णुर्देवता। भुरिगार्षी गायत्री छन्दः।

ॐ इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम्। समू॑ढमस्य पाꣳसु॒रे स्वाहा॑ ॥ ( ऋ० १-२२-१७ )

विष्णुः = व्यापकः परमात्मा। वेवेष्टि सर्वं जगदिति विष्णुः। अथवा—सर्वंप्राणिनो हि भूतेन्द्रियमनो जीवभावेन आविशति प्रविशति सर्वं जगदिति विष्णुः= परमेश्वरः। इदम् = जगत्। विचक्रमे = विक्रान्तवान् निर्मितवानित्यर्थः। त्रेधा = त्रिविधं पदं गतिमित्यर्थः। निदधे=स्वकीयं पदं प्रक्षिप्तवान् निहितवान् स्थापितवानित्यर्थः। यद्वा—भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा पदं निहितवान्। यद्वा—अस्य = विष्णोः पदं पद्यते ज्ञायते, इति पदं विज्ञानघनानन्दमजमद्वैतमक्षरमित्येवं लक्षणम्। स्वरूपम्। समूढम् = दर्शनायोग्यम् गुप्तमित्यर्थः। सम्यगन्तर्भूतं

विश्वमिति शेषः। यथा—जगतः पांसुरे=पांसुले पांसुलमये प्रदेशे पिहितं द्रव्यं दर्शनयोग्यतारहितं भवति तथैव अस्य विष्णोः शरीरं पांसुल इव प्रदेशे निहितं पदं न दृश्यते। यदुक्तम्—"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।" स्वाहा='सु+आ+हा' तस्मै विष्णवे सुखेनात्मानं जुहोमि समर्पयामीत्यर्थः। पांसुरे=अत्रतु लुप्तोपमा एतत्॥ ११॥

त्रिविक्रम अवतारधारी विष्णु ने इस प्रतीयमान सब जगत् के उद्देश्यकर तीन प्रकार के पाद प्रक्षेपण किया। इनके धूली लगे पैर में ही सम्पूर्ण विश्व का समावेश हो गया॥ ॥ ११ ॥

इस विषय में कविकुल सम्राट् गोस्वामी तुलसीदास जी ने लिखा है—

"जबहिं त्रिविक्रम भए खरारी" (चौपाई)

बलिबाँधत प्रभु बाढउ, सो तनु बरनि न जाई।

(श्रीरामचरितमानस का० ४, दो० २९)

त्रीणि पदेत्यस्य मेधातिथिः ऋषिः। विष्णुर्देवता। गायत्री छन्दः।

**ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्॥ (ऋ० १-२२-१८)**

विष्णुः अदाभ्यः=केनापि हिंसितुमशक्यः अर्थात्—केनापि पराजेतुं न शक्यते। गोपाः=सर्वस्य जगतो रक्षकः। विष्णुः=व्यापकः। पृथिव्यादिस्थानेषु। अत=एव एतेषु त्रीणि पदानि। विचक्रमे=आक्रान्तवान् इत्यर्थः। किं कुर्वन् धर्माणि=अग्निहोत्रादीनि। धारयन्=पोषयन्। समस्तस्य जगतः, गोपा=गोपायिता रक्षक इत्यर्थः॥ १२॥

यह व्यापक प्रभु किसी से भी धोखा न खाने वाले अर्थात्—किसी से पराजित न होने वाले। प्रत्येक वस्तुओं में विद्यमान है, सब धारण-पोषण रक्षक और तीन पैर से समस्त जगत् को नाप लिया। ऐसे उनके सामर्थ्य को जानो॥ १२॥

विष्णोःकर्माणीत्यस्य मेधातिथिः कण्वः ऋषिः। विष्णुर्देवता। गायत्री छन्दः।

**ॐ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा॥ (ऋ० १-२२-१९)**

हे ऋत्विगादयः! विष्णोः कर्माणि=पालनादीनि। पश्यतः=अवलोकयतः। यतः=यैः कर्मभिः। व्रतानि अग्निहोत्रादीनि। पस्पशे=सर्वो यजमानः स्पृष्टवान्।

विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः। तादृशो विष्णुः। इन्द्रस्य युज्यः=योज्योऽनुकूलः सखा भवति ॥ १३ ॥

विष्णु के कार्य को देखो। जिनके आश्रय से ही मनुष्य के सब कार्य चलते हैं। यह इन्द्र का योग्य सखा और व्यापक प्रभु जीव का मित्र है ॥ १३ ॥

तद्विष्णोः इत्यस्य मेधातिथिः कण्वऋषिः। अश्विनीप्रभृतिदेवता। गायत्री छन्दः।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ ( ऋ० १-२२-२० )

सूरयः = विद्वांसः ऋत्विगादयः विष्णोः संबन्धि परमम्=उत्कृष्टम्। तत्=शास्त्रप्रसिद्धम्। पदम्=साकेतं वैकुण्ठम् स्वर्गस्थानम् इत्यर्थः। शास्त्रदृष्ट्या सर्वदा पश्यन्ति। तत्र दृष्टान्तः। दिवीव=आकाशे यथा आततम्=सर्वतः प्रसृतम्। चक्षुः=निरोधाभावेन विशदं पश्यति तद्वत् ॥ १४ ॥

इस व्यापक परमात्मा श्रीराम का परम स्थान दिव्यलोक में है। जैसे—आकाश में प्रकाशित हुए सूर्य को मनुष्य देखते हैं, उसी प्रकार ज्ञानी जन अपने हृदय में सदा उन्हें देखते हैं। प्रत्येक वस्तु में उनके कार्य को प्रत्यक्ष स्पष्टता के साथ देखते हैं ॥ १४ ॥

तद्विप्रास इत्यस्य मेधातिथिः कण्वः ऋषिः। अश्विनीप्रभृतिदेवता। गायत्रीछन्दः।

ॐ तद् विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ ( ऋ० १-२२-२१ )

पूर्वोक्तं विष्णोः यत् परमं पदमस्ति। तत् पदं विप्रासः=मेधाविनः। समिन्धते=सम्यग्दीपयन्ति कीदृशाः। विपन्यवः=विशेषेण स्तोतारः। जागृवांसः=शब्दार्थयोः प्रमादराहित्येन जागरूकाः इत्यर्थः ॥ १५ ॥

उन व्यापक प्रभु राम का वह स्थान है, जो कर्मकुशल ज्ञानीजन जागने वाले हैं, वे सदा प्रकाशित अग्नि के समान सर्वत्र प्रकाशित रूप में उन्हें देखते हैं ॥ १५ ॥

श्रियः कमलवासिन्या रमणोऽयं महाप्रभुः।
तस्माच्छ्रीराम इत्यस्य नाम सिद्धं पुरातनम् ॥

सहस्रनाम्नां श्रीशस्य तुल्यं मुक्तिप्रदं नृणाम् ।
विष्णुमासि समुत्पन्नो विष्णुरित्यभिधीयते ॥
( पद्मपुराण उत्तरखण्ड २६९–७४–७५ )

यह महाप्रभु कमल में निवास करने वाली श्री देवी के साथ रमण करने वाले हैं। इसलिये इनका पुरातन पावन नाम श्रीराम स्वतः सिद्ध है। यह 'राम' एक नाम विष्णु के सहस्र नाम के तुल्य है, एवं मनुष्यों के मुक्ति प्रदान करने वाले हैं। विष्णुमासि = चैत्रमास विष्णु का मास है। अतः चैत्रमास में प्रकट होने के कारण ही श्रीराम जी विष्णु कहे जाते हैं।

श्रीसीतारामसमर्पणमस्तु
श्रीरामनारायणदासशास्त्रिणा, पंचसूक्तस्य सिद्धान्तदीपिका
संस्कृत-हिन्दीव्याख्या समाप्ता ।

# अथ लक्ष्मीसूक्तानुष्ठानविधिः

ॐ हिरण्यवर्णामिति पञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः "हिरण्यवर्णामि"त्यादीनां तिसृणाम् ऋचाम् अनुष्टुप्छन्दः "कांसोस्मितामि-त्यादि" ऋचां बृहतीछन्दः। "चन्द्रां" "आदित्यवर्णे" द्वे ऋचे त्रिष्टुप्छन्दः "उपैतु मामि"त्यादितः, "आर्द्रां, यः" पर्यन्तानामष्टऋचाम् अनुष्टुच्छन्दः। शेषऋचां प्रस्तारपंक्तिच्छन्दांसि सन्ति।

जातवेदा देवता। हिरण्यवर्णामिति बीजम्। कांसोस्मितामिति शक्तिः। कीर्तिं-मृद्धिं ददातु इति कीलकम्। मम श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थे पाठे च विनियोगः।

ॐ श्रीमिति बीजाभ्यां जलेन त्रिवारं करशुद्धिं कुर्यात्।

अंगन्यासः—हिरण्यवर्णामिति शिरसि, तां म आवह इति नेत्रयोः, अश्वपूर्वामिति कर्णयोः, कांसोऽस्मितामिति नासिकायां, चन्द्रां प्रभासामिति मुखे, आदित्यवर्णे-इति कण्ठे, उपैतुमामिति बाह्वोः, क्षुत्पिपासामिति हृदये, गन्धद्वारामिति नाभौ, मनसः काममिति गुह्ये, कर्दमेनेति पायौ, आपः सृजन्तु इत्यूर्वोः, आर्द्रां पुष्करिणीमिति जान्वोः, आर्द्रां यः करिणीमितिपादयोः। यः शुचिः प्रयतोभूत्वा" इति सर्वाङ्गे। जलेन हस्तौ प्रक्षालयेत् ॐ इत्यस्य विशेषणं प्रतिन्यासं योजयेत्।

करन्यासः—हिरण्यवर्णायै अङ्गुष्ठाभ्यां नमः, हरिण्यै तर्जनीभ्यां नमः, सुवर्ण-रजतस्रजायै मध्यमाभ्यां नमः, चन्द्रायै अनामिकाभ्यां नमः, हिरण्मय्यै कनिष्ठि-काभ्यां नमः, लक्ष्म्यै करतलकरपृष्ठाभ्यां नमः।

हृदयादिन्यासः—ॐ हिरण्यवर्णायै नमः हृदयाय नमः, ॐ हरिण्यै नमः शिरसे स्वाहा, ॐ सुवर्णरजतस्रजायै नमः शिखायै वषट्, ॐ चन्द्रायै नमः कवचाय हुम्, ॐ हिरण्मय्यै नमः नेत्रत्रयाय वौषट्, ॐ लक्ष्म्यै नमः अस्त्राय फट्। एवं न्यासं कृत्वा ॐ भूर्भुवः स्वरोमिति दिग्बन्धः।

अथ ध्यानम्—

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा, करकमलधृतेष्टाभीतियुग्माम्बुजाता।
मणिमुकुटविचित्रालंकृतिः पद्ममाल्या, भवतु भुवनमाता सन्ततं श्रीः श्रियै नः॥

प्रयोगविधिः—यःश्रीकामः पुरुषः स शुचिर्बाह्याभ्यन्तःकरणैः शुद्धः सन् तथा प्रयतो जितेन्द्रियो नियमतत्परश्च भूत्वा सततं सङ्कल्पदिनात्प्रभृतिपञ्चदशाब्देषु प्रत्यहं स्वशाखा उक्तविधिना एनमग्निं संस्कृत्य श्रीसूक्तस्य पञ्चदश ऋग्भिः, पञ्चदशा-ज्याहुतीर्हुत्वा ततः परं श्रियः पञ्चदश ऋचं साकल्येन एकवारं पठेत्। यथाशक्ति

अखण्डपारायणं कुर्यात्। अथवा पञ्च दशवारम् अखण्डपरायणं कृत्वा तत एकैकामृचां विधिवत् यथासंख्यं जपेत्। तदशक्तौ लौकिकेऽग्नावपि पञ्चदशऋग्भिः प्रत्यहं पञ्चदशाज्याहुतीर्हुत्वा पञ्चदशवारं श्रीसूक्तं जपेत्।

तस्य श्रीकामस्यास्मिन्नेव जन्मनि महती श्रीप्राप्तिर्भविष्यतीति पृथ्वीधरेण भाष्यकृता विज्ञाप्यते। विधिवद् अनुष्ठानासमर्थस्य तु छायामात्रं वा यथायोग्यं फलं भवत्येव। प्रतिबन्धकबाहुल्ये तु जन्मान्तरे फलानुभवो भविष्यतीति सिद्धान्तः।

यदुक्तं मंत्ररहस्ये—

"अधिकारी यथादेशे यथाकाले यथामनुः। यादृग्विधानसन्धानः प्रजपेत् तादृशं फलम्॥
कालदेशक्रियारूपाद्यनुरूपं लभेन्नरः। प्रत्युत्कटेन पुण्येन तस्मिन्नेव च जन्मनि॥
तत्फलं प्राप्नुयात्सिद्धौ नात्र कार्या विचारणा। न देवतोषणं व्यर्थं भविष्यति कदाचन॥
तस्मान्मंत्रं जपेद् योगी यतः शुद्धेन्द्रियक्रियः" ॥ इति ॥

श्रीसूक्तपुरुषसूक्तहोमप्रयोगः—

आचम्य प्राणानायम्य सङ्कल्प्य मम गृहे पञ्चसूनाजनितदोषपरिहारपूर्वकं दशविधलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्मीस्थिरीकरणार्थमलक्ष्मीनाशार्थं शाकलतंत्रोक्तपञ्चमहायज्ञसमवेतं पुरुषसूक्तश्रीसूक्तहोममग्न्युपस्थानं पुरुषसूक्तपूर्वकं श्रीसूक्तजपम् आयुष्यकरणं क्षमापनं विसर्जनकर्मार्पणं च करिष्ये।

तंत्रोक्तहवनमंत्रः—

ॐ ओं ह्रीं क्रों ऐं श्रीं क्लीं सौं रं वं श्रीं नमो भगवत्यै महालक्ष्म्यै स्वाहा।

इस मंत्र से दस हजार हवन एवं दस हजार जप भी करे।

जपमंत्रः—

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीमहालक्ष्म्यै नमः।
दारिद्र्यदुःखभयहारिणि का त्वदन्या, सर्वोपकारकरणाय सदाऽर्द्रचित्ता॥

संपुटविधिः—

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं क्लीं ह्रीं श्रीं महालक्ष्म्यै नमः। ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि। ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ दारिद्र्यदुःखभयहारिणि का त्वदन्या, सर्वोपकारकरणाय सदाऽर्द्रचित्ता।

इसी प्रकार प्रत्येक मंत्रों के साथ साथ संपुट लगाकर १६ पाठ प्रतिदिन करने से ४८ दिन में लक्ष्मी की प्राप्ति होगी। अथवा—बिल्व वृक्ष के नीचे, घी चीनी ( शक्कर ) बेल के गूदे को मिलाकर १०८ बार नित्य त्रिकाल हवन करे।

नित्यत्रिकाल १६ तियाँ ४८ पाठ दैनिक ६ मास तक करे तथा प्रत्येक शुक्रवार के दिन ११६ बार हवन करे तो धनादिक का लाभ अवश्य हो इस प्रकार सहस्रदिन तक प्रयोग करे। अथवा १०० दिन तक, ७१ दिन तक, ४८ दिन तक पाठ और हवन नित्य करने से अवश्य ही धनप्राप्ति होगी।

## मन्त्रकल्याणवे अनुष्ठानविधिः—

श्रीं ह्रीं क्लीं इति विन्यस्य हिरण्यप्रतिमां यजेत्।
लक्ष्मीं संपूज्य हारिद्रचूर्णसौवर्णपङ्कजैः॥
राजतैः पुण्डरीकैश्च पूजयेद् गाः सुवासिनीः।
पूर्णेन्दौ पूर्णकुम्भे वा ध्यात्वा नारायणीं पराम्॥
प्राप्याक्षमालां सौवर्णी कमलासनसंस्थितः।
ऋचन्तु प्रजपेदाद्यां प्रत्यहं त्रिसहस्रकम्॥
त्रिसन्ध्यमेवं लक्षान्ते क्षीरस्युततर्पणम्।
सहस्रमाज्यहोमञ्च शतं ब्राह्मणभोजनम्॥
सुवासिनीनां दशकं सालङ्कारमथार्चयेत्।
एकां धेनुं सवत्सां च श्रोत्रियाय प्रदापयेत्॥
इत्थमक्षरलक्षान्तं योजयेन्नियतव्रतः।
हिरण्यपूर्णस्तेजस्वी धनाढ्यो भोगभाग्यवान्॥
जीवेच्चिरं शरीरान्ते चन्द्रसायुज्यमाप्नुयात्॥

## मूलमंत्रः—

ॐ ऐं हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥
ॐ ऐं स्वाहा॥ १॥

ऋचं द्वितीयां श्रीसूक्तं प्रतिसार्यं सहस्रकम्।
प्रजपेन्नियताहारः प्रत्यक्षरसहस्रकम्॥
त्रयस्त्रिंशद्दिने रात्रौ स्वप्ने लक्ष्मीः प्रसीदति।
शान्तिकर्मादिकं सर्वं प्रागुक्तवदुपचारेत्॥
अविघ्नेन जपन्सिद्धयेद् यदि लक्ष्मीप्रसादतः।
अनपायां श्रियं याति हिरण्यं गोनरादिकान्॥

## मूलमंत्रः—

ॐ ह्रीं तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥ ॐ ह्रीं स्वाहा॥ २॥

अनुष्ठानविधिः—

श्रीसूक्ते तु तृतीयर्चं श्रीबीजेन समापकम्।
न्यासं कृत्वा जपेन्नित्यं प्रातः प्रातः सहस्रकम्॥
आद्वादशाब्दात्सिद्धिः स्याद् अन्यद् दुर्गाविधानवत्।
मंत्रसिद्धौ भवेद् राजा शत्रूञ्जित्वा लभेच्छ्रियम्॥

मूलमंत्रः—

ॐ श्रीं अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।
श्रियं देवीमुपह्वये श्रीर्मादेवी जुषताम्॥ ॐ श्रीं स्वाहा॥ ३॥

अनुष्ठानरत्नाकरे—

ऋचं चतुर्थीं श्रीसूक्ते प्रजपेदष्ट लक्षकम्।
सहस्रं प्रत्यहं जप्त्वा त्रिसाहस्रं भृगोर्दिने॥
राकायां पंचसाहस्रं क्षीराहारो जितेन्द्रियः।
पलाशसमिधा होमः पयसा गोघृतेन च॥
तर्पणाशीतिसाहस्रं होमश्चाष्टसहस्रकः।
ब्राह्मणाष्टशती पूज्या श्रीवाग्बीजन्तु विन्यसेत्॥
सम्यक्सारस्वतप्राप्तिर्भविष्यति न संशयः।
आपंचपुरुषं सद्धिर्नात्र कार्या विचारणा॥

ॐ श्रीं ऐं इति पल्लवन्यासः

मूलमंत्रः—

ॐ क्लीं कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्॥ ॐ क्लीं स्वाहा॥ ४॥

अनुष्ठानं भागधेयभूषणे—

श्रीसूक्ते प्रथमे वर्गे प्रजपेत् पंचमीं ऋचम्।
मायाबीजेन विन्यस्य भक्तितो भुवनेश्वरीम्॥
अक्षीणभासां चन्द्राख्यां ज्वलन्तीं यशसा श्रियम्।
देवैर्जुष्टामुदाराञ्च पद्मिनीमीं भजाम्यहम्॥
त्वां वृणे त्वत्प्रसादेन ममालक्ष्मीर्विनश्यतु।
प्रत्यहं चैकसाहस्रं गोष्ठस्थः प्रजपेद् ऋचम्॥
अखण्डदीपं प्रज्वाल्य गोघृतेन जितेन्द्रियः।
प्रत्यक्षरं त्रिसाहस्रजपान्मुच्येत संकटात्॥
मण्डलैश्च त्रिभिः पूर्णैर्दारिद्र्यान्मुच्यते ध्रुवम्।
कमलैरर्चयेद् देवीं गोभ्यो घासं प्रदापयेत्॥

एतत्पुण्यप्रभावेण दरिद्रोऽपि धनी भवेत्।
ह्रीं इत्यादि षडङ्गन्यासः।

मूलमंत्रः—

ॐ 'वद वद'—चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे॥ ॐ वद वद स्वाहा॥५॥

अनुष्ठानं सौभाग्यसंजीवने—

द्वितीयवर्गे प्रथमामृचं जपेत् प्रीणाति बाला तरुणारुणश्रीः।
यस्यास्तपो योगबलेन बिल्वफलान्यलक्ष्मीं शमयन्ति नृणाम्॥
तनुमध्यां महालक्ष्मीं बालां त्रिपुरसुन्दरीम्।
त्रिबिल्वपत्रैः संपूज्य सहस्रं प्रजपेद् ऋचम्॥

ऐं क्लीं सौं ऐं ह्रीं श्रीं इति बीजषट्कमनेन न्यासं कुर्यात्।

मूलमंत्रः—

ॐ वाग्वादिनी—आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः॥ ॐ वाग्वादिनी स्वाहा'॥ ६॥

अनुष्ठानविधिः—

अनुष्टुभर्चं श्रीसूक्ते सप्तमीं प्रजपेद् बुधः।
द्वात्रिंशल्लक्षपर्याप्तौ सिद्धिं प्राप्नोति नान्यथा॥
कुबेराद्यास्तस्य देवाः प्रत्यक्षाः स्युर्न संशयः।

मूलमंत्रः—

ॐ ऐं उपैतु मां देवसखः कीर्तिश्च मणिना सह।
प्रादुर्भूतः सुराष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे॥

ॐ ऐं स्वाहा॥ ७॥

अनुष्ठानविधिः लक्ष्मीयामले—

प्रजपेद् विधिना नित्यं श्रीसूक्ते चर्चमष्टमीम्।
प्रत्यक्षरसहस्रं च गायत्रीमपि तावतीम्॥
श्रीगायत्रीदशांशं तु लक्ष्मीमंत्रशतांशकम्।
अनिष्टपरिहारार्थो मंत्रोऽयं परिकीर्तितः॥
दुर्भाग्यं शमयेद् दैवदुर्लिपिं परिमार्जयेत्।
फलाशी प्रजपेन्मंत्रं भक्त्या रुद्राक्षमालया॥
शेषं तंत्रे द्रष्टव्यम् इति।

मूलमंत्रः—

ॐ सौं क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात्॥ ॐ सौं स्वाहा॥ ८॥

वैखानसविद्यायाम्—

ऋचामनुष्टुभो गन्धद्वारामिति जपेच्छ्रियः।
षष्ट्युत्तरशतानां तु सहस्राणां च संख्यया॥
पद्माक्षमालया पद्मासनस्थः सह पार्थिवम्।
बीजं विन्यस्य मंत्रेण श्रीबीजेन च तज्जपेत्॥

मूलमंत्रः—

ॐ हँ सः—गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ ॐ हं सः स्वाहा॥ ९॥

अनुष्ठानविधिः मंत्रकल्यार्णवे—

मनसः काममित्याद्यां श्रीसूक्ते दशमीमृचम्।
मनोवाङ्नियतो नित्यमष्टलक्षजपञ्चरेत्॥
वाक्सिद्धिर्योगसिद्धिश्च भोग्यलाभो भवेद् ध्रुवम्।

मूलमंत्रः—

ॐ आं मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥ ॐ आं स्वाहा॥ १०॥

अनुष्ठानविधिः मंत्रकल्यार्णवे :—

कर्दमेनेत्यादिकां तु श्रीसूक्तैकादशीमृचम्।
गावं सवत्सां संपूज्य जपेद्चरलक्षकम्॥

( इति पुत्रप्राप्तिः )

मूलमंत्रः—

ॐ ह्रीं कर्दमेन प्रजा भूता मयि संभव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥ ॐ ह्रीं स्वाहा॥ ११॥

ॐ क्रौं आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। निच देवीं मातरं श्रियं वासय मे कुले॥ ॐ क्रौं स्वाहा॥ १२॥

( इति लक्ष्मीप्रार्थना )

ॐ क्लीं आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ ॐ क्लीं स्वाहा॥ १३॥

ॐ श्रीं आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥
ॐ श्रीं स्वाहा ॥ १४ ॥

ॐ ह्रूँ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ ॐ ह्रूँ स्वाहा ॥ १५ ॥

ॐ ह्रूँ ॐ स्वाहा ॐ ह्रूँ ॐ ऐं यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । श्रियं पंचदशर्चं च श्रीकामः सततं जपेत् ॥ ॐ ह्रूँ ॐ ऐं स्वाहा ॥ १६ ॥

# परिशिष्टम्

## यजुर्वेद पाठ करने की कुछ विधि—

मूलवेद पाठ का अभ्यास संहितापाठ, पदपाठ तथा क्रमपाठ के तीन रूपों में किया जाता था।

याज्ञवल्क्य शिक्षा में कहा है, कि :—

> कालिन्दी संहिता ज्ञेया पदयुक्ता सरस्वती।
> क्रमेण वर्तते गङ्गा शम्भोर्वाणी तु नान्यथा॥

अर्थात्—संहितापाठ यमुना है, पदपाठ सरस्वती है और क्रमपाठ श्री गङ्गा जी हैं, यह सम्भु की वाणी है, अन्यथा नहीं।

संहितापाठ में मन्त्र को पूरा पढ़ा जाता है, पदपाठ में प्रत्येक मन्त्र का प्रत्येक पद पृथक्-पृथक् कर पढ़ा जाता है और क्रमपाठ में दो-दो पद क्रम के साथ-साथ मिलकर पढ़े जाते हैं। इस प्रकार इन तीन प्रकार के पाठों से पदों में किसी प्रकार का भ्रम नहीं रह जाता।

प्रकृति रूप में इन तीनों प्रकार के पाठों का अभ्यास करने के बाद, आठ विकृतियों में पाठ किया जाता है यथा—आठ विकृतियाँ :—

> जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
> अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥

संहितापाठ, पदपाठ, क्रमपाठ, जटापाठ, पुष्पमाला, क्रममालापाठ, शिखापाठ, रेखापाठ, ध्वजपाठ, दण्डक्रमपाठ, द्विपदरथपाठ और घनपाठ, इतने पाठ करने का भेद महर्षियों ने कहा है।

१—संहिता—"पूर्वेणोत्तरः सꣳहितः"। पूर्वेण पदान्तेन उत्तरः पदादिसंहितो यदा क्रियते स्वरतो वर्णतश्च संहितोच्यते। यथा—इषेत्वा। त्वोर्ज्जे। इत्यादि।

मंत्रों का प्रकृत उपलब्ध पाठ ही "संहिता" कहलाता है।

"वर्णानामेकप्राणयोगः सꣳहिता" वर्णानामेकोच्छ्वासोच्चारणयोगे पदे वाक्ये वा विश्रामः सा च प्राणसंहिता। (प्रातिशाख्ये १५७)

संहितापाठ प्रत्येक पद को विच्छेदपूर्वक पढ़ना ही "पदपाठ" कहलाता है।

२—पद = पदमधीयते पदकः।

"पदविच्छेदोऽसꣳहितः" (श. श. २-१५६)

२–क्रम = क्रमसंहितेयम् । "पदविच्छेदोऽसंहितः" पदे पदे विच्छेदः पदविच्छेदो यदा क्रियते । अहितः पदपाठः, यथा—इषे । त्वा । ऊर्जे । त्वा । इत्यादि ।

पद के दो दो पदों का "पाठक्रम" कहलाता है ।

"द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्जम्" ( प्रा. शा. ४–१८२ )

संहिता पद और क्रम ये तीनों प्रकृति स्वरूप हैं ।

अपृक्तवर्जम् = "एकवर्णं पदमपृक्तम्" एकवर्णस्यापृक्तसंज्ञा भवति । यथा—आ । इ । उ ।

इत्यादि में अपृक्त संज्ञा हुई । इनके पढ़ने का फल महर्षि याज्ञवल्क्य ने इस प्रकार कहा है—

संहिता नयते सूर्यपदं च शशिनः पदम् । क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम् ॥

( या० शिक्षा )

संहितापाठ सूर्यलोक को ले जाता है, पदपाठ चन्द्रलोक को, और क्रमपाठ सूक्ष्म अनामय पद को ले जाता है । उपर्युक्त अष्ट विकृतियों का क्रम ही प्रकृति है । "क्रमपूर्वा महर्षिभिः" सभी प्रकृतियों में क्रम पूर्व में होता है ।

जटा का लक्षण—

क्रमं यथोक्तं प्रब्रूयाद् व्युत्क्रमेण क्रमेण च ।
सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः ॥

यथोक्त क्रम दो या तीन अथवा चतुष्क्रमात्मक को अनुलोम-विलोम एवं पुनश्च अनुलोम सन्धियुक्त अविराम पाठ करना ही 'जटापाठ' कहलाता है । उदाहरण–

सहस्रशीर्षा पुरुषः पुरुषः सहस्रशीर्षासहस्रशीर्षा पुरुषः ॥

सहस्रशीर्षेतिसहस्र शीर्षा ।

माला—

माला दो प्रकार की होती है । पुष्पमाला और क्रममाला । वर्तमान समय में केवल पुष्पमाला ही प्रचलित है । यद्यपि क्रममाला का भी पाठ वैदिक करते हैं, परन्तु बहुत कम ।

पुष्पमाला—

माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ।
आवर्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसंक्रमाः ॥

जिस प्रकार पुष्पों की माला आपस में गुथी हुई होती है, उसी प्रकार पद भी

आपस में एक दूसरे से गुथे हुए होने पर भी "माला" नाम की विकृति कहलाती है। उस माला नामक विकृति में जटा में कहे हुए पांच क्रम में से तीन ही "क्रम-व्युत्क्रम-संक्रम" इसमें पढ़े जायेंगे। उदाहरण—

यज्ञेन यज्ञम् । यज्ञं यज्ञेन । यज्ञेन यज्ञम् ।
यज्ञमयजन्त । अयजन्त यज्ञम् । यज्ञ-
मयजन्त । अयजन्त देवाः । इत्यादि

क्रममाला—

ब्रूयात् क्रमविपर्यासावर्धर्चस्यादितोऽन्ततः ।
अन्तं चादि नयेदेवं क्रममालेति गीयते ॥

आधी ऋचा को आदि से क्रम युक्त एवं अर्धर्चा के अन्त से विपर्यास करते हुए पढ़े। इसी प्रकार क्रम को अन्त तक ले जाय तथा विपर्यास ( उल्टा ) को आदि तक ले आवे। वह क्रम माला कहलाती है। उदाहरण—

यत्पुरुषेण । अतन्वतेत्यतन्वत ।
पुरुषेण हविषा । अतन्वत यज्ञम् ।
हविषा देवाः । यज्ञन्देवाः ।
देवा यज्ञम् । देवा हविषा ।
यज्ञमतन्वत । हविषा पुरुषेण ।
अतन्वतेत्यतन्वत । पुरुषेण यत् । इत्यादि ।

शिखालक्षण—

पदोत्तरां जटामेव शिखामार्याः प्रचक्षते ।

विकृतियों में सर्वप्रथम कही हुई 'जटा' नामक विकृति का पाठकर अन्त में एक पद अग्रिम का उच्चारण करना ही 'शिखा' विकृति कहलाती है। उदाहरण—

चन्द्रमा मनसो मनसश्चन्द्रमा ।
चन्द्रमा मनसो जातः ।
मनसो जातः जातो मनसो
मनसो जातश्चक्षोः । इत्यादि

घन—

घन भी दो प्रकार का है। तथापि इसमें भी एक ही वर्तमान समय में अत्यधिक वैदिक समाज में प्रचलित है।

घनलक्षण—

शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत्। अयं घन इति प्रोक्तः।

पूर्व में कही हुई 'शिखा' नामक विकृति का उच्चारण कर फिर उन्हीं 'शिखा' के पदों को विपर्यासकर ( उल्टाकर ) एवं पुनः क्रम से उन्हीं पदों को "शिखावत्" कहने से 'घन' नामक विकृति विशेष कहलाती है। उदाहरण—

सहस्रशीर्षा पुरुषः पुरुषः सहस्रशीर्षा सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्राक्षः पुरुषः सहस्रशीर्षा सहस्रशीर्षा पुरुषः सहस्राक्षः। सहस्रशीर्षेति सहस्र। शीर्षा।

पुरुषः सहस्राक्षः सहस्राक्षः पुरुषः पुरुषः सहस्राक्षः सहस्रपात्सहस्रपात्सहस्राक्षः पुरुषः पुरुषः सहस्राक्षः सहस्रपात्।

सहस्राक्षः सहस्रपात्सहस्रपात्सहस्राक्षः सहस्राक्षः सहस्रपात्। सहस्राक्षऽइति सहस्र। अक्षः। सहस्रपादिति सहस्र पात्। इत्यादि।

नोट—जटा में दो पदों की तीन-तीन आवृत्ति करे। कुल ६ हैं। जैसे—

वायवं स्थ स्थ वायवो वायवं स्थ।

इसी प्रकार शिखा में भी जटा उक्त पदों की आवृत्ति कर अग्रिम पद जोड़ दे। कुल ७ हैं। जैसे—

वायवं स्थ स्थ वायवो वायवं स्थ देवः॥

तीन पदों का घन होता है। उसमें प्रथम एवं द्वितीय पदों की आवृत्ति पाँच पाँच बार तथा तृतीय पद की ३ बार आवृत्ति होती है। कुल १३ है। जैसे—

प्रजापतिश्चरति चरति प्रजापतिः

प्रजापतिश्चरति गर्भे गर्भे चरति

प्रजापतिः प्रजापतिश्चरति गर्भे॥

**यजुर्वेद उच्चारण करने के लिये कुछ व्याकरण और स्वर चिह्न—**

वेद की ऋचाओं खड़ी और आड़ी रेखायें देकर उनके अनुसार उन अक्षरों के उच्च ( ऊँच ) मध्यम और मन्द स्वर में बोलने के नियम बनाये गये हैं। इनको स्वर कहा जाता है। इनमें तीन प्रकार का भेद है। उदात्त, अनुदात्त और स्वरित। परन्तु इनमें भी प्रत्येक स्वर अधिक जोर से अथवा न्यून रूप में बोला जा सकता है। अतः प्रत्येक के दो-दो भेद हो जाते हैं। जैसे—उदात्त, उदात्ततर, अनुदात्त, अनुदात्ततर, स्वरित, स्वरिततर, इनके अतिरिक्त एक स्वर (एक श्रुति) और भी माना जाता है। सब मिलकर सात स्वर होते हैं। स्वरों के विषय में महाभाष्यकार पतञ्जलि मुनि ने भी लिखा है :—स्वयं राजन्त इति स्वराः। आयामोदारुण्यमणुता स्वरस्य उच्चैः कराणि शब्दस्य। आयामः = गात्राणां निग्रह, दारुण्यम् = स्वरस्य दारुणता रूक्षता, अणुता=कण्ठस्य संवृता, उच्चैः कराणि शब्दस्य अन्वव सर्गो गात्राणां शिथिलता। मार्दवम् स्वरस्य मृदुता। स्निग्धता, उरुता स्वरस्य महत्ता कण्ठस्येति नीचैः कराणि शब्दस्य।

त्रैस्वर्य्येणाधीमहि, त्रिप्रकारैरज्भिरभिरधीमहि कैश्चिदुदात्तगुणैः कैश्चिदनुदात्त-गुणैः कैश्चिदुभयगुणैः : तद् यथा शुक्लगुणः, शुक्लः, कृष्णगुणः, कृष्ण, य इदानी-मुभयगुणः स तृतीयाख्यं लभते, कल्मष इति वा सारङ्ग इति वा।

जो दूसरे की सहायता के बिना ही स्वयं प्रकाशमान अथवा प्रकट हैं, वे स्वर कहे जाते हैं। अङ्गों का रोकना या वाणी को रूखा करना अथवा उच्च स्वर से बोलना, कण्ठ को भी कुछ रोकना, उदात्त स्वर इन्हीं नियमों अनुकूल ही बोला जाता है इसलिये उदात्त कहा जाता है।

अनुदात्त—इसमें शरीर के अङ्गों का या गात्र का ढीलापन करना स्वर को कोमलता, कण्ठ को फैला देना इत्यादि अनुदात्त स्वर से बोले जाते हैं।

उदात्त और अनुदात्त जहाँ दोनों धर्म मिले हों वहाँ स्वरित हो जाता है। जैसे—लकड़ी और लाक्षा ( लाख ) का जोड़ ( संमिश्रण ) दोनों अलग-अलग अनुभव किये जा सकते हैं। वैसे ही स्वरित में होते हैं।

एक स्वर ( एक श्रुति ) में भी उदात्त और अनुदात्त का संमिश्रण होता है परन्तु एक श्रुति में दूध और पानी की तरह होता है। इसको अनुभव नहीं किया जा सकता है।

प्राचीन ग्रन्थों में स्वरों के अट्ठारह भेद लिखे हैं। प्रारम्भिककाल में वेदपाठी स्पष्ट रूप से उच्चारण करते थे। परन्तु ध्वनि में परिवर्तन होने के कारण कुछ काल के लिये स्वरों की संख्या सात कर दी गई थी।

जब लोग इसको भी उच्चारण करने में असमर्थ हो गये तब घटते-घटते तीन ही स्वर रह गये। किन्तु वर्तमान समय में इनको भी शुद्ध रूप से उच्चारण नहीं कर सकते, इस लिये अब इस समय हाथ को ऊपर नीचे करके ही स्वरों का बोध कराया जाता है।

**उदात्तश्चानुदात्तस्वरितश्च तथैव च इमे स्वराः। प्रसन्नमनसो भूत्वा किञ्चित् नम्रमधोमुखम्। प्रणवं प्राक्प्रयुञ्जीत व्याहृती तदनन्तरम्॥ सावित्रीं चानुपूर्व्या ततो वेदान् समारभेत।**

**एकश्रुति:—**

**"स्वरितात्परमनुदात्तमुदात्तमेकमनेकं वा प्रचयः" अथवा—"स्वरितात्परोऽनाङ्कित एकश्रुतिः"**

उदात्त अनुदात्त और स्वरित स्वरों की अत्यन्त सन्निकर्षता ( सामीप्य ) को एकश्रुति कहते हैं। ( महाभाष्य १-२-३२। एकश्रुति को उदात्तश्रुति मानते हैं। कोई कोई एकश्रुति को अनुदात्तश्रुति मानते हैं। )

अथवा—स्वरित से परे जिस अक्षर पर या स्वरित से परे जिन जिन अक्षरों पर कोई चिह्न न हो तो उनको एकश्रुति कहते हैं। इसी को प्रचय स्वर भी कहते हैं। क्योंकि एकश्रुति सर्वदा स्वरित के पश्चात् ही होती है ( तानः प्रचितः प्रचः निचीतः उदात्तमयः एकस्वर :—ये पर्यायवाचक शब्द हैं )। जैसे—"हवामहे" यहाँ पर वैदिकजन एकश्रुति या प्रचय स्वर कहते हैं।

**( क ) "उच्चैरुदात्तः" ( पाणिनिसूत्र )**

ताल्वादि स्थानों में ऊर्ध्वभाग से निष्पन्न अच् को उदात्तसंज्ञा है।

जैसे—"आ ये मित्रावरुणा" यहाँ पर 'अ' उदात्त है।

**"अपूर्वोऽनुदात्तपूर्वो वाऽनाङ्कित उदात्तः"**

जिसके पूर्व कोई स्वरचिह्न न हो अथवा अनुदात्त पूर्व में हो ऐसा चिह्न रहित अक्षर उदात्त स्वर होता है। जैसे—अपूर्व = अग्ने यं यज्ञमध्वरम्। यहाँ पर "अ" उदात्त है अनुदात्तपूर्व = "यं ज्ञ" यहाँ ये दोनों उदात्त हैं।

यदि मंत्र का आरम्भ उदात्त से प्रारम्भ होता हो और आगे स्वरित है

तो कर्ण ( कान ) के पास से हाथ मध्य में आयेगा। क्योंकि उदात्त का स्थान कर्ण के पास है। यदि उदात्त से परे अनुदात्त हो तो वाम भाग से मंत्र प्रारम्भ होता है। ( मूर्ध्नि वामे चोपर्युदात्तः इति नियमः ) जैसे—स्वरित परे होने पर उदात्त है = ततो॑ वि॒राड॑। इत्यादि मूर्ध्नि। अनुदात्तपरे उदात्त है = स जा॒तोऽअ॑त्य॑ इत्यादि वामभागे।

( ख ) "नीचैरनुदात्तः" ( पाणिनिसूत्र )

तात्वादि स्थानों में अधोभाग से निष्पन्न अच् को अनुदात्त संज्ञा होती है।

ग॒णानां॑ त्वा यहाँ 'ग॒' अनुदात्त है।

"अधोरेखयाऽनुदात्तः"

अक्षर के नीचे पड़ी रेखा से अनुदात्त स्वर का चिह्न होता है। जैसे—अ॒ग्निमी॑ळे पु॒रोहि॑तम्। यहाँ "अ॒, पु॒" अनुदात्त स्वर है।

"हृदि दक्षिणेऽधश्चानुदात्तः"

अनुदात्त का स्थान हृदय के पास है। अतः जिस अक्षर के नीचे रेखा हो, वह हृदय के समीप से प्रारम्भ होता है। जैसे—गा॒य॒त्री ।···इत्यादि

"अनुदात्तादनुदात्ते परे ह्युदात्तो वामे भागे गच्छत्यनुदात्तस्तु दक्षिणे भागे।

अनुदात्त से अनुदात्त परे होने पर उदात्त वाम भाग और अनुदात्त दक्षिण भाग। अर्थात् हाथ को दांये बांये घूमावे। जैसे—त्रि॒पादू॒र्ध्व उदै॒त्। इत्यादि में दायें और बायें दायें घूमावे।

( ग ) "समाहारः स्वरितः" ( पाणिनिसूत्र। )

उदात्त और अनुदात्त जहाँ दोनों धर्म मिले हों, वहाँ स्वरित संज्ञा होती है।

"ऊर्ध्वरेखया स्वरितः"

अक्षर के ऊपर खड़ी रेखा से स्वरित स्वर होता है। जैसे—अ॒ग्निमी॑ळे पु॒रोहि॑तम्। "मी॑ हि॑" ये दोनों स्वरित हैं।

श्रुतिमूलात्पतितः स्वरितः। स्वरितस्तूपरिष्ठात् मध्ये पतिष्यति। अनुदात्ता-स्स्वरिते परेऽनुदात्तः नीचैर्गमिष्यति। उदात्तोपरि गमिष्यति इति भावः।

"अनुदात्तात् पराजात्यक्षैप्र प्रश्लिष्टाभिनिहिता अधो वक्ररेखा।"

यकार वकार सहित अनुदात्त से परे जाति स्वर होता है। जात्य, क्षैप्र, प्रश्लेष, ( प्रश्लिष्ट ) और अभिनिहित स्वरित का निर्देश नीचे ( ‿ )ऐसी वक्र रेखा किया जाता है। उदाहरण—

जात्य = वीर्याणि प्रवोचं य॒ ( यजुर्वेद ५-१८ )।

क्षैप्र = द्यौरसि पृथिव्यासि ( १-२ )।

प्रश्लिष्ट = अभीन्धातामुखे वरुं श्रीष्वा ( ११-६१ )

अभिनिहित = घर्मोऽसि १-२। वधोऽसि १-२८ )

"उदात्तपरा अधस्तात् चिह्नेन"।

यदि जाति क्षैप्र प्रश्लिष्ट और अभिनिहित स्वरित से परे उदात्तवर्ण हो तो इनके नीचे ꣳ ऐसा चिह्न लगाया जाता है। उदाहरण—

जात्य = वेदूंत्युमर्वतां त्वा ( २-९ )।

क्षैप्र = उर्वुन्तरिक्षमन्वेमि ( १-७-११ )।

प्रश्लिष्ट = अभीमं महिमा ( ३८-२७ )।

अभिनिहित = पाशैर्योऽस्मान्द्वेष्टि यं च ( १-२५ )।

जात्य क्षैप्र प्रश्लिष्ट और अभिनिहित स्वरित से परे जहाँ अनुदात्त हो या एकश्रुति हो। अथवा—जहाँ कोई भी वर्ण आगे न हो तो _ ऐसा चिह्न किया जाता है। और जहाँ इन से परे उदात्त हो तो उसके नीचे ꣳ ऐसा चिह्न लगाया जाता है। _ इस चिह्न को पूर्ण न्युब्जीकरण कहते हैं और ꣳ इस चिह्न को अर्ध न्युब्जीकरण कहते हैं। तत्र हस्तन्युब्जीकरणं कुर्यात्।

"तस्यादित उदात्तमर्धह्रस्वम्" ( पाणिनिसूत्र )।

संस्कृते—'ह्रस्वग्रहणमतंत्रम्' अतंत्रम् = अप्रधानम् उपलक्षणार्थत्वात्। अर्थात्-सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेषः स्वरविभागः।

स्वरित के आदि की आधी ह्रस्वमात्रा उदात्त होता है, और शेष अनुदात्त होता है। इसी प्रकार दीर्घ प्लुत सभी स्वरितों के आरम्भ की आधी मात्रा उदात्त मानी जाती है।

उपर्युक्त सूत्र के अनुसार ह्रस्व स्वरित की पूर्व आधी मात्रा उदात्त और आधी मात्रा अनुदात्त होती है। इसी प्रकार दीर्घ की भी पूर्व आधी मात्रा उदात्त और शेष १॥ डेढ़ मात्रा अनुदात्त एवं प्लुत की पूर्व आधी मात्रा उदात्त और शेष २॥ अढ़ाई मात्रा अनुदात्त होती है। उदाहरण—क्व १वोऽश्वाः, रथानां न ये २ऽराः, शतचक्रं यो ३ऽह्यः।

"गुं"

" ॐछन्दसि" यह सारस्वत का सूत्र है।

छन्द में मकार को अनुस्वार ॐ आदेश होता है।

"अनुस्वार ठँ शेष्मसुमकारः" ( प्रा० शा० सुत्र )

मकारोऽनुस्वारमापद्यते शेष्मप्रत्ययेषु रेफे परतः।

उष्म = श ष स ह और रेफ परे होने पर मकार को अनुस्वार ( गुँ ) आदेश होता है।

"नुश्चान्तः पदे रेफे" ( प्रा० शा० सू०। )

नकारोऽनुस्वारमापद्यते।

न, म, आदि वर्ण परे हो तो मकार रूप अनुस्वार होता है, न कि गुंकार रूप में। इसका मुख्य कारण यह है कि प्रातिशाख्य पंचदश शाखाओं के लिये सामान्यधर्म बतलाता है। विशेषरूप से श्रीकात्यायन ने पृथक् रूप से माध्यान्दिनीशाखा लिये सूत्र लिखा है।

ह्रस्वादग्रे भवेद् दीर्घो, दीर्घादग्रे भवेल्लघुरिति नियमः।

( क ) लघ्वनुस्वारे—अङ्गुष्ठाकुञ्चनं कार्यम् = अपाॐरसेन व्वरुणः !

( ख ) दीर्घगुंकारे तर्जनीप्रसारः = गणपतिꣳहवामहे।

( ग ) संयोगे च परे ह्रस्वः = सॐस्याम।

ऋवर्ण से परे होने पर भी दीर्घ अथवा ह्रस्व वर्ण पूर्व में हो तो भी अनुस्वार द्विमात्रिक ( दीर्घ ) ꣳ होता है। जैसे—देवानांꣳहृदये ( १६-५४ )

सूचना—वर्तमान समय में गुरु अनुस्वार ( गूँ ) की लिपी प्रायः नष्ट हो चुकी है, परन्तु केवल उच्चारण मात्र प्राचीन सम्प्रदाय के द्वारा ही जाना जा सकता है ( अर्थात् ज्ञान प्राप्त कर सकते हैं )। गुंकार के स्वरूप प्राचीन ग्रन्थों में इस प्रकार पाये जाते हैं दीर्घ = ठ.। ह्रस्व = ढ.। अब-ꣳ ॐ

विसर्ग ( : ) का स्वरूप—

"विसर्गोष्वपीषद् विरामः" ( प्रतिज्ञा पा० सू० ४ )।

ह्रस्वात्परे दीर्घात् परे च क्रमेण विसर्गस्य स्थाने पूर्वस्वरसहितस्य हकारस्य प्रतीतिः। वर्ग पञ्चमाक्षरात्परस्य विसर्गस्य सानुनासिकं हकारोच्चारणम्। विसर्गे तु यत्र ः एवं चिह्नं, तत्र अधो मध्ये दक्षिणे वा हस्तो गमिष्यति केवलं कनिष्ठिका एव प्रक्षेप्तव्या। वेद में अनुदात्त एवं प्रचय से परे विसर्ग ः हो तो दाहिने,

नीचे और मध्य में हाथ ले जाय। केवल कनिष्ठा अङ्गुली चलानी चाहिये। अन्य अंगुलियों को मुट्ठी बाँध लेवें।

दक्षिण का उदाहरण = पद्भ्याम्भूमिर्द्दिशः ( दाँ ये )।

अनुदात्त का उदाहरण = उदैत्पुरुषः ( नीचे )।

प्रचय का उदाहरण = सहस्रशीर्षा पुरुषः ( मध्य )।

( २ ) विसर्गे तु यत्र ः एवं चिह्नं, तत्र वामे भागे उपरि च हस्तो गमिष्यति केवलं तर्जनी एव प्रक्षेपणीया।

उदात्त से परे यदि विसर्ग हो तो हाथ को ऊपर या बायें ले जाय और केवल तर्जनी अंगुली फैलावे। जैसे—

उदात्तः मर्थोपुरः ( ऊपर )

सहस्राक्षः ( बाँ ये )

विसर्गे तु यत्र ÷ एवं चिह्नं तत्र कनिष्ठिकातर्जन्यौ प्रक्षेपणीये।

दीर्घ स्वरित अथवा ह्रस्व से स्वरित परे विसर्ग हो तो कनिष्ठा ही खोले और ह्रस्व स्वरित परे विसर्ग हो तो कनिष्ठिका और तर्जनी दोनों अंगुली खोलनी चाहिये। जैसे—

सूचीभिं ÷ शम्यन्तुत्वा यहाँ दोनों अँगुली खोले।

विसर्गों के नाम—

तरा बलिका और प्रचिता कहते हैं।

तरा को उदात्त ः विसर्ग कहते हैं।

बलिका को अनुदात्त ः विसर्ग कहते है।

प्रचिता को स्वरित ÷ विसर्ग कहते हैं।

अवग्रहः—

"अवग्रहः पदान्तवत्" अवग्रहशब्देन पूर्वपदमिहाभिधीयते अवग्रहः यथा अद्भ्यऽइत्यत्। भ्यः। व्वाजऽइति वाजः। तिष्ठद्भ्य इति। तिष्ठत् भ्यः तिष्ठत्। भ्यः।

"अवग्रह अन्तोदात्तः स्यात्तदनन्तरम्" अवग्रहादव्यवहितोत्तरः स्वरितस्वरः स्यात् तदा तैरोऽविरामसंज्ञः स्वरो भवति। अवग्रहाभावे तु तैरो व्यञ्जन एव। अवग्रहस्तु पदपाठे भवति, स तु वेष्टनशब्देन प्रसिद्धः। यथा—अतिथिभिरित्यतिथिम्। अपि च–यज्ञा यज्ञियमिति यज्ञा। यज्ञियम्।

रङ्गः—

स्वरपरे अनुनासिक को रङ्ग कहते हैं। अथवा-जिस अक्षर के आगे ३̐॥, अथवा—१॥ का अङ्क हो उसको रङ्ग कहते हैं। रङ्ग में तर्जनी अंगुली खोले।

उदाहरण—

| | |
|---|---|
| तथा लोका ३̐॥ अंकल्पयन् | जहिशत्रू १̐॥ रपमृधं ÷ । |
| महा ३̐॥ इन्द्रं ÷ | क्रतू १̐॥ रनुं । |
| देवा ३̐॥ इदंषि | वनस्पती १̐॥ रनुं । |
| वशा ३̐॥ अनुं | परिधी १̐॥ रनुं । |

**पाद एवं पदादिस्थस्य यकारस्य संयुक्तस्य ऋकारेण युक्तस्य आदिमध्यावसानस्थस्य द्वित्वस्य च चवर्गतृतीय जकारोच्चारणम् ।**

पद एवं पाद के आदि में तथा संयोग और अवग्रह ( पद के वेष्टन ) में यकार को जकार का उच्चारण करते हैं।

पाद में—**यज्ञेन ।**

पद में—**यज्ञम् ।**

संयोग में—**गेह्याय ( १६-४४ ) ।**

हकार रेफ संयुक्त ऋकार के संयोग में ही यकार को जकार उच्चारण होता है। उदाहरण—

हकार मे—**गेह्याय ।**

रेफ में—**वीर्याणि ।**

संयुक्त ऋकार में—**सामान्यृग्भिः ।**

जहाँ दो यकार हो वहाँ भी जकार उच्चारण होता है। जैसे—**धाय्या रूपम् ( १९-२४ ) ।**

इसी प्रकार बकार भी पदादि में द्वित्व होता है। उसको तीन प्रकार का उच्चारण करना चाहिये। आदि में गुरु, मध्य में लघु, अन्त में लघुतर-जैसे—**ब्वायवस्थ ( सं १-१ ) सर्व्वतं ÷**

**ऋकारस्य रकारस्य च एकारसहितोच्चारणम् ।**

श ष स ह और ऋकार के योग में वर्णान्तर से असंयुक्त रेफ का "रे"

उच्चारण होता है जैसे—"सहस्रशीर्षा" यहाँ शीरेषा उच्चारण होता है। "कृण्वन्ति" यहाँ क्रेण्वन्ति ऐसा उच्चारण होता है। तृतीय अन्तःस्थ वर्ण लकार का भी "ले" उच्चारण होता है। जैसे—"शतवल्शोधिरोह" ( ५–४५ ) यहाँ "वलेशो" ऐसा कहा जाता है उपसर्ग से परे यकार को जकार उच्चारण नहीं होता और वकार द्वित्व नहीं होता है जहाँ पर होता हो वहाँ साम्प्रदायिक ही जानना चाहिये। अथवा विकल्प से जानना।

**षकारस्यासंयुक्तस्य संयुक्तस्य च टवर्गं विहाय कवर्गद्वितीयवर्णं खकारोच्चारणम्।**

मूर्धन्य षकार का खकार उच्चारण होता है। परन्तु टवर्ग के योग में षकार का खकार उच्चारण नहीं होता।

वो वां वै वा यदि युष्मदर्थ में हों अथवा–निरर्थक हो या पादपूर्ति में एवं आदेश अर्थ में हो अथवा विकल्पार्थ बोध हो तो वहाँ वकार का द्वित्व उच्चारण नहीं होता। उदाहरण—

युष्मदर्थ में—देवोवः सविता ( १–१ )।

निपात ( निरर्थक ) में—वातो वा ( ९–७ )।

विकल्पार्थ में—मित्रा वरुण नेत्रा वा मरुन्नेत्रा ( ९–३६ )।

संयोगादि वर्ण को द्वित्व होता है, परन्तु ऋवर्ण परे रहते द्वित्व नहीं होता। जैसे—ऊष्म और अन्तस्थ से परे स्पर्श को द्वित्व होता है। यदि मध्य में ऊष्म हो और दोनों तरफ स्पर्श हो तो पूर्व और पर दोनो स्पर्शों को द्वित्व नहीं होता। और रेफ हकार से परे पर वर्ण का द्वित्व होता है।

**"हलः द्वित्व उच्चारणम्"**

ऋचाओं के अन्त में मकार हल् हो तो दोनों ओठों को पृथक् कर फिर उसी मकार का धीरे से उच्चारण करना चाहिये और मुट्ठी भी बाँधनी चाहिये। जैसे—गर्भधम् ( ३–१९ )।

जहाँ तकार हो वहाँ अंगुष्ठ और तर्जनी दोनों अंगुलियों को मिलाकर कुण्डलाकृति करनी चाहिये। जैसे—सहस्रपात्।

जहाँ नकार हो वहाँ अंगुष्ठ में तर्जनी के नख का स्पर्श करना चाहिये। जैसे–रश्मीन्।

"क् ट् ङ् ण्" यदि हल हो तो तर्जनी अंगुली को झुका देनी चाहिये। उदाहरण—
ककार में—भिषक् ( १६—५ )
टकार में—स्वाट् २—१८

ङकार और णकार का उदाहरण पद पाठ में मिलता है। संहिता में नहीं। जैसे—दध्यङ् ११—३० । वृषण् ११—११ ।

पकार यदि हल् हो तो पाँचों अंगुली एकत्रित कर संकोच कर लेवें। इसका भी प्रतीक मंत्र में उदाहरण मिलता है। जैसे—गायत्री त्रिष्टुप् २३—३३ ।

१—स्वरित में तीन अंगुल, अनुदात्त में छ अंगुल, उदात्त में नौ अंगुल कर हस्त चालन करे।

२—अनुदात्त में उदात्त से हाथ को वाम भ्रू से आरम्भ करे, उदात्त स्वरित, उदात्त को क्रम से दक्षिण को हाथ लावे स्वरित से उत्तर में अनुदात्त हो तो उसको तत्त्वज्ञ जन प्रचय स्वर कहते हैं अथवा एकस्वर भी कहते हैं।

# परिशिष्टम्

## श्रीरामजी का वर्णन ऋग्वेद में भी आता है—

ॐ प्रतद्दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्चशतास्मयु पथा विश्राव्येषाम् ।
( ऋग्वेद मण्डल १०–सूक्त ९३–मंत्र १४ )

देवताओं ने अपनी अपनी कामनाओं की पूर्ति के लिये यज्ञ मार्ग में पाँच सौ घोड़ों से युक्त रथों को खड़ाकर दुःशीम पृथवान् वेन और प्रतापी श्रीरामजी आदि धनपति राजाओं के सम्मुख प्रशंसा युक्त स्तोत्रों का पाठ सुनाये ।

रामम्—ऋक् मं० १०—सू० ३–मं० ६ ।
प्रभराम—यजुः अ० १६—मं० ४८ ।
रामम्—सामवेद, उत्तरार्चिक प्रपाठक ७—मं० ३–५ ।
रामः—अथर्वकाण्ड ६—अ० १३—सूक्त १३३—१ ।
रामे—अथर्व का० १—अ० ५—सूक्त २३–१ ।

ॐ सचन्त यदुषसः सूर्य्येण चित्रामस्य केतवो रामविन्दन् ।
आयन्नचत्रं ददृशे दिवो न पुनर्यतो नकिरद्धानुवेद ॥
( ऋग्वेद मण्डल १०–सूक्त १११–मंत्र ७ )

ज्ञानशील विद्वानों ने इस राम की संपत्ति तीनों वेदों के सारभूत 'रां' इस पद को शब्द से और अर्थ से प्राप्त ( जानलियां ) किया । यदि कोई कहे कि उकार नहीं है तो–यदुषसः = उषाकाल के समान अल्प प्रकाश जो विराज ( विराड् ) अकार रूप है, वह सूर्य के साथ अर्थात्–पूर्ण प्रकाश उकार रूप हिरण्य गर्भ के साथ, सचन्त = ऐक्य को प्राप्त होकर स्थित है । अर्थात्–कार्य सामान्य से अकार में ही उकार समावेश है । ऐसा होने पर भी 'अम्' यही निष्पन्न हुआ, 'राम्' नहीं । इस पर कहते हैं कि—चित्राम् = चित्र अग्नि का वाचक है, तद् बीज रेफ है, वह रेफ सस्वर स्वर विशिष्ट होने पर, अम् के साथ सवर्ण दीर्घ करने पर 'राम्' यह पद होता है । इस प्रकार यह अर्थ है—रेफार्थ अग्नि रूप चिदाभास के साथ समष्टि स्थूल और सूक्ष्म कारणों का इस 'राम्' पद से प्रदर्शित हुआ । अर्धमात्रा जो ॐकार में मानी जाती है, वह इस 'राम्' पद में भी विद्यमान है । अर्थात्—रेफाकार उकार विशिष्ट अर्धमात्रात्मक मकार सिद्ध है । दृष्टान्त–दिवो

नेति-'न' उपमार्थक है। जैसे—जागृत अवस्था में दृष्ट पदार्थ ही स्वप्नावस्था में दृष्ट होते हैं। उसी प्रकार समष्टित्रय के वाचक 'राम' पद से क्रमशः व्यष्टि रूप स्थूल सूक्ष्म कारणवाचि 'राम्' पद को पुनः पढ़ना चाहिये।

इसका विशेषण—आयन्नक्षत्रमिति = आयन् और नक्षत्र यह विशेषण हैं।

'आ' इति स्वरूपं य इव आचरतीति विग्रहे यत्। आचारक्विबन्ताद् यत्प्रातिपदिकाद् धातोः कर्तरि क्विबिति तस्मिँस्तुक् "आयत्" स्वरूपं सिद्धम्। इदं वर्णद्वयं द्वितीयेन रामित्यनेन सह पठितं चेत् 'रामाय' इति चतुर्थ्यन्तं पदं भवति।

"आय" यह दोनों वर्ण द्वितीयवार पठित 'राम्' के साथ जोड़ने पर 'रामाय' यह चतुर्थ्यन्त पद हुआ।

तदनन्तर—नक्षत्र पद से नक्षत्रों में मुख्य चन्द्र ही लिया गया है और चन्द्र का कारण मन है, एवं मन का कारण हृदय है। अतः नक्षत्र पद से हृदय पदार्थ ही लिया गया है। हृदयशब्दार्थ-आगम शास्त्र में 'नमः' पद माना गया है। यथा—'ता अन्नमसृजन्त' इति श्रुतिः। इस स्थल में 'अन्न' पद पृथिवी का बोधक है, इसी प्रकार हृदय शब्दार्थ 'नमः' शब्द उद्धृत हुआ।

यतः = यतमानस्य-प्रयत्नशील पुरुष की।

नकिरद्धानुवेद = इतस्ततो न फिरति न विक्षिपति इति नकिः। स्थिर मनः, अद्धा = साक्षात्, नु = निश्चितं, वेद = जानाति। अर्थात्—प्रयत्नशील पुरुष मन को स्थिर बुद्धि निश्चय रूप से उसको जान सकता है।

**मंत्रार्थस्तु—रां रां चासौ आश्चेति रां रामः तस्मै रामाय नमः। "मनसा साक्षात्करोतीति" "मनसैव वेदितव्यमित्यर्थः" श्रुतिः।**

मंत्र का अर्थ अनुसन्धान करते हुए पदार्थ स्वरूप का मन से साक्षात्कार होता है।

इति रामतारकमंत्रार्थः॥

# परिशिष्टम्

## नारायण शब्द की व्युत्पत्ति—

'नर :'—नृ नये इत्यस्माद् धातोः नरतीति नयतीतिः विग्रहे 'ऋदोरप्' इति सूत्रेण अप् प्रत्यये गुणे च कृते विभक्तिकार्ये 'नरः' इति रूपं निष्पन्नम् ।

समस्त जीवों के कर्मानुसार यथार्थ रूप में न्याय करने से उस परमात्मा का नाम नर हुआ है । 'नरतीति नरः प्रोक्तः परमात्मा सनातनः' (इति मनुना उक्तम् )

अतः नर पद वाच्य परात्पर ब्रह्म परमात्मा भगवान् श्रीराम ही हैं ।

'नार :'—नराणां समूहो नार इति विग्रहे, समूहार्थे अणप्रत्यये 'तद्धितेष्वचामादेः' इति सुत्रेण आदेरचोवृद्धौ विभक्तिकार्ये 'नारः' इति रूपं सिध्यति ।

अम् इत्यस्माद् धातोः, 'अम्यते प्राप्यते' इति विग्रहे, कर्मणि घञ् प्रत्यये विभक्तिकार्ये 'आमः' इति रूपम् अथवा अम्यते अनेनेति विग्रहे अथवा—अमन्ति गच्छन्ति अस्मिन्निति विग्रहे, सर्वत्र घञ् प्रत्यये आदिरचो वृद्धौ विभक्तिकार्ये 'आमः' इतिरूपम् आधारार्थे सिध्यति ।

नारस्य आमो गतिरिति विग्रहे, षष्ठी समासे विभक्ति लुकि, सर्वणदीर्घे, 'नाराम' 'पृषोदरादीनि यथोपदिष्टम्' इति सूत्रेण 'ना' इत्यस्य लोपे कृते विभक्तिकार्ये 'रामः' इति समस्त प्राणिमात्रसमूहस्य गन्तव्यार्थे सिद्धयति ।

समस्त नर-नारियों के एवं प्राणिमात्र के अन्तःकरण में आयन = आश्रय ( जो अपना रहने का स्थान ) बना रखा है, वह भगवान् राम ही का नारायण नाम प्रसिद्ध हुआ है ।

दूसरे प्रकार का भी है—नाराः आपः, आमः शयनार्थमाश्रयो यस्य स रामः । जल है, शयन का आश्रय जिसका, उन्हें राम कहते हैं ।

## विष्णु शब्द की व्युत्पत्ति—

वेवेष्टीति विग्रहे, विष्लृ व्यापक धातु से 'क्नु' प्रत्यय लगाने से विष्णु शब्द बनता है, कित्वात गुण नहीं होता है ।

अथवा—विष्णुत्वात्सर्व प्राणिनोऽपि भूतेन्द्रियमनोजीवभावेन शरीरान्ते प्रविशतीति विष्णुः । अतः व्यापक और रमण दोनों का एक ही अर्थ है इसलिये विष्णु को ही राम कहते हैं ।

श्री शब्द की व्युत्पत्ति—

श्रयन्तीं श्रियमाणाञ्च श्रीणातीं शृण्वतीमपि ।
शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् ॥
श्रीयते चाखिलैर्नित्यं श्रयते च परम्पदम् ।
श्रीशब्दस्य हि भावार्थः सूरिभिरनुमीयते ॥
श्रयन्त्येतामिति श्रीः ( अभियुक्तसारवल्यां ग्रन्थे )

श्रिञ् सेवायां धातु से 'बाहुलकात्कर्मणि क्विप्' 'क्विब्वचिप्रच्छ्याय तस्तुकटप्रुजु श्रीणां दीर्घोऽसम्प्रसारणञ्च' इस वार्तिक से क्विप् और प्रकृति का दीर्घ करने पर श्री बना है। यद्यपि 'श्रयति हरिं या सा श्रीः'। इस व्युत्पत्ति से श्री शब्द निष्पन्न होता है, क्विप् प्रत्यय कर्ता में होता है, तथापि 'श्रीयते चाखिलैर्नित्यम्' इस निरुक्तिवचन द्वारा कर्म में भी क्विप् प्रत्यय होता है।

श्रीयते ब्रह्मेन्द्ररुद्रादि–मुनिवरगणैश्च चराचरचेतनैश्च सेव्यते, इतिश्रीः।

अर्थात्—जो ब्रह्मा इन्द्र रुद्र मुनि श्रेष्ठ चराचर समस्त जगत् से सेवित, वही श्री जी हैं।

श्रु श्रवणे धातु से भी 'औणादि के डी' इस सूत्र से डी प्रत्यय टि लोप विभक्ति-कार्य करने पर श्री शब्द बना है।

अर्थात् चेतनकृतं किञ्चिदपि प्रार्थना रूप विज्ञापनं भगवन्तं श्रीरामं श्रावयति अथवा स्वयं वात्सल्य सौशील्यादि दिव्यगुण जलनिधित्वात् शृणोतीति श्रीः।

शरणागतों की किञ्चिदपि ( थोड़ी सी भी ) प्रार्थना हो तो उसको विस्तार पूर्वक भगवान् श्रीराम को सुनाती हैं, अथवा—वात्सल्य सौशील्यादि दिव्यगुणों के समुद्र श्री जी स्वयं सुनाती हैं, वही श्री जी हैं।

## पुरुषसूक्त-न्यासः

अस्य श्री पुरुष-सूक्तमन्त्रस्य नारायण ऋषिः। आद्याः पञ्चदश अनुष्टुप् अन्त्या-त्रिष्टुप्। पुरुषोदेवता। जगद्बीजं न्यासे विनियोगः।

अस्य उत्तरनारायणसूक्तस्य नारायणऋषिः। आद्यानां तिसृणां त्रिष्टुप्छन्दः। चतुर्थ पञ्चमयोरनुष्टप्छन्दः। अन्त्यायाः त्रिष्टुछन्दः। आदित्योदेवता न्यासे विनियोगः।

## हृदय-न्यासः

अद्भ्यः सम्भृतः पृथिव्यै रसाच्चविश्वकर्मणः समवर्तताग्रे। तस्यग्रे त्वष्टा विदध-द्रूपमेतितन्मर्त्यस्य देवत्वमाजानमग्रे। हृदयाय नमः।

वेदाहमेतं पुरुषमित्यादिना···शिरसे स्वाहा।

प्रजापतिश्चति, इत्यादिना…शिखायै वषट्।
यो देवेभ्य इत्यादिना…कवचायहुम्।
रुचं ब्राह्मये इत्यादिना…नेत्रत्रयाय बौषट्।
श्रीश्चते लक्ष्मीश्च इत्यादिना…अस्त्राय फट्।

अङ्गन्यासः

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
१ स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ वामकरे ॥
पुरुषऽएवेदꣳ सर्वंयद्भूतं यच्चभाव्यम्।
२ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ दक्षिणकरे ॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः।
३ पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ वामपादे ॥
त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
४ ततो विष्वङ्व्यक्रामत्साशना नशनेऽअभि ॥ दक्षिणपादे ॥
ततो विराडजायतविराजोऽअधिपूरुषः ।
५ स जातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ वामजानुनि॥
तस्माद्यज्ञात्सर्वहुतः सम्भृतंपृषदाज्यम्।
६ पशूँस्ताँश्चक्रेवायव्या नारण्याग्राम्याश्च ये ॥ दक्षिणजानुनि॥
तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे।
७ छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥वामकट्याम्॥
तस्मादश्वाऽअजायन्त ये के चो भयादतः।
८ गावोह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥दक्षिणकट्याम्।
तं यज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः।
९ तेनदेवाऽअयजन्त साध्याऽऋषयश्च ये ॥ नाभौ ॥

यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ।

१० मुखंकिमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ हृदये ॥

ब्राह्मणोऽस्यमुखमासीद् बाहूराजन्यः कृतः ।

११ ऊरूतदस्ययद्वैश्यः पदभ्याᳬशूद्रोऽअजायत ॥ वामबाहौ ॥

चन्द्रमामनसोजातश्चक्षोः सूर्योऽअजायत ।

१२ श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ दक्षिणबाहौ ॥

नाभ्याऽसीदन्तरिक्षᳬ शीर्ष्णोद्यौः समवर्तत ।

१३ पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँ २॥ अकल्पयन् ॥ कण्ठे ॥

यत्पुरुषेण हविषादेवायज्ञमतन्वत ।

१४ वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥ मुखे ॥

सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः ।

१५ देवायद्यज्ञन्तन्वानाऽअबध्नपुरुषम्पशुम् ॥ नेत्रयोः ॥

यज्ञेन यज्ञमयजन्तदेवास्तानिधर्म्माणि प्रथमा न्यासन् ।

१६ तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥मूर्ध्नि ॥

# श्रीराम-मानसोपचारपूजनम्

| | | |
|---|---|---|
| १ | ॐ श्रीं क्लीं अं केशवाय नमः | ॐ कीर्त्यै नमः शिरसि |
| २ | ,, ,, ,, आं नारायणाय नमः | ॐ कान्त्यै नमः मुखे |
| ३ | ,, ,, ,, इं माधवाय नमः | ॐ तुष्ट्यै नमः दक्षिणनेत्रे |
| ४ | ,, ,, ,, ईं गोविन्दाय नमः | ॐ पुष्ट्यै नमः वामनेत्रे |
| ५ | ,, ,, ,, उं विष्णवे नमः | ॐ श्रुत्यै नमः दक्षिणकर्णे |
| ६ | ,, ,, ,, ऊं मधुसूदनाय नमः | ॐ शान्त्यै नमः वामकर्णे |
| ७ | ,, ,, ,, ऋं त्रिविक्रमाय नमः | ॐ क्रियायै नमः दक्षिणनासिकायां |
| ८ | ,, ,, ,, ॠं वामनाय नमः | ॐ दायायै नमः वामनासिकायां |
| ९ | ,, ,, ,, ऌं श्रीधराय नमः | ॐ मेधायै नमः दक्षिणकपोले |
| १० | ,, ,, ,, ॡं हृषीकेशाय नमः | ॐ हृषायै नमः वामकपोले |
| ११ | ,, ,, ,, एं पद्मनाभाय नमः | ॐ श्रद्धायै नमः ऊर्ध्वोष्ठे |
| १२ | ,, ,, ,, ऐं दामोदराय नमः | ॐ लज्जायै नमः अधरोष्ठे |
| १३ | ,, ,, ,, ओं वासुदेवाय नमः | ॐ लक्ष्म्यै नमः ऊर्ध्वदन्तपंक्तौ |
| १४ | ,, ,, ,, औं संकर्षणाय नमः | ॐ सरस्वत्यै नमः अधोदन्तपंक्तौ |
| १५ | ,, ,, ,, अं प्रद्युम्नाय नमः | ॐ प्रीत्यै नमः जिह्वायाम् |
| १६ | ,, ,, ,, अः अनिरुद्धाय नमः | ॐ रत्यै नमः ग्रीवायाम् |
| १७ | ,, ,, ,, कं चक्रिणे नमः | ॐ जयायै नमः दक्षिणस्कन्धे |
| १८ | ,, ,, ,, खं गदिने नमः | ॐ दुर्गायै नमः दक्षिण |
| १९ | ,, ,, ,, गं शार्ङ्गिणे नमः | ॐ प्रजायै नमः दक्षिणमणिबन्धे |
| २० | ,, ,, ,, घं खड्गिने(खङ्गिने) नमः | ॐ सत्यायै नमः दक्षिणहस्तांगुलिमूले |
| २१ | ,, ,, ,, ङं शंखिने नमः | ॐ चण्डायै नमः दक्षिणहस्तांगुल्याग्रे |
| २२ | ,, ,, ,, चं हलिने नमः | ॐ वाण्यै नमः वामस्कन्धे |
| २३ | ,, ,, ,, छं मुसलिने नमः | ॐ विलासिन्यै नमः वाम |
| २४ | ,, ,, ,, जं शूलिने नमः | ॐ विजयायै नमः वाममणिबन्धे |
| २५ | ,, ,, ,, झं पाशिने नमः | ॐ विरजायै नमः वामकरांगुलीमूले |
| २६ | ,, ,, ,, ञं अंकुशिने नमः | ॐ विश्वायै नमः वामकरांगुल्याग्रे |
| २७ | ,, ,, ,, टं मुकुन्दाय नमः | ॐ विमदायै नमः दक्षिणपादमूले |
| २८ | ,, ,, ,, ठं नन्दजाय नमः | ॐ सुनन्दायै नमः दक्षिणजानुनि |
| २९ | ,, ,, ,, डं नन्दिने नमः | ॐ स्मृत्यै नमः दक्षिणपादगुल्फे |

| | |
|---|---|
| ३० ,, ,, ,, ढं नराय नमः | ॐ ऋद्ध्यै नमः दक्षिणपादांगुलिमूले |
| ३१ ,, ,, ,, णं नरकजिते नमः | ॐ समृद्ध्यै नमः दक्षिणपादांगुल्यग्रे |
| ३२ ,, ,, ,, तं हरये नमः | ॐ शुद्ध्यै नमः वामपादमूले |
| ३३ ,, ,, ,, थं कृष्णाय नमः | ॐ बुद्ध्यै नमः वामपादजानुनि |
| ३४ ,, ,, ,, दं सत्याय नमः | ॐ भुक्त्यै नमः वामपादगुल्फे |
| ३५ ,, ,, ,, धं सात्वताय नमः | ॐ मत्यै नमः वामपादांगुलिमूले |
| ३६ ,, ,, ,, नं शौरये नमः | ॐ क्षमायै नमः वामपादांगुल्यग्रे |
| ३७ ,, ,, ,, पं शूराय नमः | ॐ रमायै नमः दक्षिणपार्श्वे |
| ३८ ,, ,, ,, फं जनार्दनाय नमः | ॐ उमायै नमः वामपार्श्वे |
| ३९ ,, ,, ,, बं भूधराय नमः | ॐ क्लेदिन्यै नमः वामपृष्ठे |
| ४० ,, ,, ,, भं विश्वमूर्तये नमः | ॐ क्लिन्नायै नमः नाभौ |
| ४१ ,, ,, ,, मं वैकुण्ठाय नमः | ॐ वसुदायै नमः उदरे |
| ४२ ,, ,, ,, यं त्वगात्मनेपुरुषोत्तमाय० | ॐ वसुधायै नमः हृदि |
| ४३ ,, ,, ,, रं असृगात्मनेबलिनेनमः | ॐ परायै नमः वक्षांसे |
| ४४ ,, ,, ,, लं मांसात्मनेबलानुजाय० | ॐ परायणायै नमः ककुदि |
| ४५ ,, ,, ,, वं वेदात्मनेबलाय नमः | ॐ सूक्ष्मायै नमः वामांसे |
| ४६ ,, ,, ,, शं अस्थ्यात्मने वृषभाय० | ॐ सन्ध्यायै नमः, हृदयादिदक्षिणकरान्तम् |
| ४७ ,, ,, ,, षं मज्जात्मनेवृषभायनमः | ॐ प्रज्ञायै नमः हृदयादिवामकरान्तम् |
| ४८ ,, ,, ,, सं शुक्रात्मने हंसाय नमः | ॐ प्रभायै नमः दक्षिणपादान्तम् |
| ४९ ,, ,, ,, हं प्राणात्मनेवाराहायनमः | ॐ निशायै नमः वामपादान्तम् |
| ५० ,, ,, ,, ळं शक्त्यात्मनेविमलाय० | ॐ अमोघायै नमः जठरान्तम् |
| ५१ ,, ,, ,, क्षं क्रोधात्मनेनृसिंहायनमः | ॐ विद्युतायै नमः मुखान्तम् |
| ५२ ,, ,, ,, भं भरताय नमः | ओं माण्डव्यै नमः |
| ५३ ,, ,, ,, शं शत्रुघ्नाय नमः | ओं श्रुतिकीर्त्यै नमः |
| ५४ ,, ,, ,, लं लक्ष्मणाय नमः | ओं उर्मिलायै नमः |
| ५५ ,, ,, ,, रां रामाय नमः | ओं सीतायै नमः |
| ५६ ,, ,, ,, हं हनुमते नमः | ओं अञ्जनायै नमः |

श्रीं बीजम् । मायाबीजम् = ह्रीं । कामबीमूज = क्लीं । वाणीबीजम् = ऐं 'श्रीं ह्रीं क्लीं ऐं, कमलवासिन्यै स्वाहा'

इस मंत्र को दसलाख जप करे तो कल्पवृक्ष के समान फल देवे ।

समाप्तश्चायं ग्रन्थः ॥

